चार: इति भाव:। सत्स्वन्येषु भक्तेर्विशिष्योक्ति: कुत:। भूयस्त्वनुबंध:। अनुबंधस्तु भक्तिस्तु भूयस्त्वात्कारणेषु प्रधानत्वादुक्त इत्यर्थ:। इति तन्त्रदीपिकोक्त्यरीत्या द्रष्टव्य:। अत्रैव न्यायवियरणम्। 'भक्तिरेवैनमिति' भक्तेरेवपृथुकमोचकत्व दर्शनान्नैशकृत्यमिति न गंतव्यम्।

अनादितो गुणाः संतो भक्त्याद्या न ह्यमूमुचन्।
जीवं तद्गुणसुव्यक्तिं कृत्वैनंमोचयेद्धरिः॥
किंचिन्नमुंचयेद्धौसौ स्वातन्त्र्यं तेन तस्य हि।
भक्तिश्चाकरणत्वेन सावकशेशत्वागथ॥
भक्त्यैनं मोचयेद्विष्णुरिति मामत्वमेष्यती। ति

'ब्रह्मतर्क'वचनादनादि गुणविस्तरे सत्यप्यव्यक्त्यदिना तदिच्छां विना मोक्षाप्राप्तिरिति। अनादिन: सन्तो भक्त्याद्या: गुणा: जीवं नामूमुचन्हि मुक्तं नकुर्युर्हि। अस्वतन्त्रत्वात्। हरिरेव तादृशजैवगुणसुव्यक्तिं कृत्वैनं जीवं मोचयेत्। भक्त्याद्यभावेवासौ हरि: किंचिन्नमुंचयेत्तेन कारणेन तस्यहरे: स्वातंत्र्यं प्रसिद्धम्। भक्ते: करणत्वेन 'भक्तिरेवैन'मिति वाक् सावकाशा औपचारिकी। हंतारामशरा इतिवत्। 'भक्त्यैनं मोचयेद्विष्णु'रिति ईशकर्तृत्ववाक् निरवकाशत्वेन प्रमाणत्वनेष्यतीति ब्रह्मतर्कवचनार्थ:।

तथाचैतावता प्रबंधेन साधनश्रेष्ठया भक्त्यैव प्रसन्नो भगवानधिकारिभ्यो मुक्तिं ददातीत्युक्तम्। एवंचेत्—

सनकाद्याः ज्ञानयोगा भक्तियोगास्तु देवताः ।
मानुषा कर्मयोगाश्च त्रिधैते योगिनः स्मृताः ॥

इति भागवतैकादशस्कन्धे विंशोध्यायोक्तरीत्या । सर्वेषां योगिनां किं भक्तियोंग एव मोक्षावाप्तौ प्रधानकारणं उत कर्मज्ञानमपि । नाद्यः कर्मयोगिनो ज्ञानयोगिनो भक्तियोगिन इत्युक्त त्रैविध्यासम्भवात् । न द्वितीयः । उदाहृतश्रुतिस्मृतिविरोधात् । तस्मादुक्तमयुक्तमित्युच्यत इति मैवम् । अभिप्रायानवगमात् । न हि कर्मणैव मुक्ति साधयतारो कर्मयोगिनः तथा ज्ञानेन भक्त्यैव ज्ञानयोगिनः भक्तियोगिन इत्युच्यंते । किं तु—

कर्माणिशास्त्रतोज्ञात्वा तत्प्राधान्यानुसारतः ।
विज्ञाता यैर्गुणाविष्णोः ज्ञेयास्ते कर्मयोगिनः ॥

इत्येकादशतात्पर्योक्तिरीत्या शास्त्रोक्त सत्कर्माचरणप्रकारवेदनपूर्वकं कर्माचरणप्राचुर्येण लब्ध विष्णुगुणगण ज्ञानजन्यभक्तिमन्तएव कर्मयोगिन इति । यथोक्तं प्रकाशसंहितायां—

निरंशाः सत्साधनयोचितजन्मसहस्रतः ।
ज्ञानं तु दशभिः प्राप्य सद्भक्ति त्रिभिराप्य च ॥
दृष्ट्वा हरिं स्थं मुच्यंते ह्यतस्ते कर्मयोगिनः ।

इति एवं विदितस्वरूपाणां कर्मयोगिनाम् ' । तथा ॥

अंगानुसारिवेदार्थं ज्ञात्वा तदनुसारतः ।
भगवद्गुणा यैर्नीयते ते प्रोक्ता ज्ञानयोगिनः ।

इत्येकादशतात्पर्यानुसारेण विदितस्वरूपाणां ज्ञानयोगिनामपि ।

सत्कर्मकृत्वा निष्कामं लभन्ति गुरुसंगतिम् ।
अतात्त्विका देवदासाः सत्कर्म शतजन्मभिः ॥
कृत्वा दशसहस्रोरु जन्मभिर्ज्ञानमाप्य च ।
भक्तिं च त्रिशतैरण्य मुच्यंते ज्ञानयोगिनः ॥ इति ।

'प्रकाशसंहितो 'क्तरीत्या भक्तिरूपव्यानसाधनसम्पत्त्यैव मुक्ति-श्रवणात् नानुपपत्तिः । तथाच मुक्तिं प्रति मुख्यसाधनीभूत भक्त्यतिशयप्रयोजकज्ञानप्राचुर्यवंतो ' ज्ञानयोगिनः ' तथा तादृशभक्त्यतिशय-प्रयोजकज्ञानप्रापक सत्कर्मप्राचुर्यवंतो 'कर्मयोगिनः' इत्युक्तं भवति । इत्यनेनेति ज्ञानभक्तियोगिनोरपेक्ष्य ज्ञानभक्त्योरल्पत्वात्कर्मयोगिन इति । विजयध्वजीये ११-२-७ श्लोकव्याख्या ।

सर्वेषां सर्वयोगैश्च प्राप्या मुक्तिर्नसंशयः ।
तथापि तु विशेषेण ससतेषां विधीयते ॥
भगवद्गुणानुसारेण वेदार्थो नीयते हि यैः ।
भक्तियोगास्तु ते प्रोक्तास्तादृशा हि सुरास्सदा ॥

एवमेकादश तात्पर्ये विंशोध्याये । अंगानुसरीत्यनेन ज्ञानयोगिनं कर्माणीत्यनेन ' कर्मयोगिनं ' चोक्ता ।—

भक्तिर्ज्ञानं च किंचित्तु पश्चात्तेष्वपि जायते ।
तथापि कर्मयोगास्ते कर्मपूर्वत्वकारणात् ॥
भगवद्गुणानुरागित्वमधिकं भक्तियोगिनाम् ।
तस्मात्तेऽप्यधिकाह्येषु देवा एव विशेषतः ॥

ईषद्वैराग्यमल्पं तु पूर्वं देवेषु जायते ।
पश्चाद्विरागोऽभ्यधिको देवानां नात्र संशयः ॥
ज्ञानाधिक्यं तु देवानां भक्त्याधिक्यं तथैव च ।
विरागोऽभ्यधिकस्तेषां सदैव सनकादिनाम् ॥
ज्ञानाधिक्यान्मनुष्येभ्यो भण्यंते ज्ञानयोगिनः ।
न तु ज्ञानाधिकास्ते वै देवेभ्यस्तु कथंचन ॥
देवानामपि कर्मित्वं विद्यते यद्यपि स्फुटम् ।
तथापि प्रत्यवायित्वान्मनुष्याः कर्मयोगिनः ॥
त्रियोगाभ्यधिको ब्रह्मा सर्वेभ्यः परमो विभुः ।
महायोगेश्वरेशेशः तस्माद्‌ब्रह्मा चतुर्मुखः ॥

इति त्रियोगे इत्येकादश तात्पर्ये । तथा—

उत्तमो भक्तियोगस्तु ज्ञानयोगस्तु मध्यमः ।
अधमः कर्मयोगश्च ब्रह्मैको मुख्यमुक्तिभाक् ॥
ज्ञानमभ्यधिकं तेषां नियतं भक्तियोगिनाम् ॥
उदेति भगवद्भक्त्या तद्वज्ज्ञानयोगिनः ।
भक्त्यंशकं यतो ज्ञानं ज्ञानस्नेहात्मिका च सा ॥
तथापि ज्ञानयोगित्वं मानुषज्ञानतोऽधिकम् ।
भक्तियोगे ततो यत्नः कार्यो विद्वद्भिरंजसा ॥

इति च भागवते तृतीये भक्तियोगतारतम्याभिधायके त्रिंशो-ध्याये भगवानुवाच देवहूतिं प्रति ।

भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते इत्यादिना तामसभक्त राजसभक्त सम्बंधि भक्तिविलक्षणतया सात्विकभक्तिः निर्गुणभक्तिश्च तद्विलक्षणतयाऽऽत्यंतिकभक्तेरपरोक्षहेतुत्वं चोच्यते ॥ तादृशापरोक्ष साहित्येन पूर्णभक्तेर्मुक्तिं प्रति मुख्यत्वज्ञापनाय सात्विक-भक्तादिस्वरूप्रदर्शक भागवत तृतीयस्कंध त्रिंशोध्यायगतश्लोका उदाह्रियंते । कर्मनिर्हारमित्यादिना तद्व्याख्यासहित्येन ।

कर्मनिर्हारमुद्दिश्य परस्मिन्वा तदर्पणम् ।
यजेद्यष्टव्यमिति वा पृथुग्भावः स सात्विकः ॥१०॥

यः कर्मनिर्हारं पापक्षपमुद्दिश्य मां यजेत् । परस्मिन् सर्वोत्तमे मयि तदर्पणं कर्मार्पणंचोद्दिश्य यजेत् । यष्टव्यं विहितत्वान्ममेदं कर्तव्यमिति वा मां यजेदपृथुग्भावः मद्रूपाणामभेददर्शी स 'सात्विको भक्तः'। राजस सात्विकयोर्भेदं पृथुग्भावाभावावेव निमित्तं नत्वर्चादावर्चनमज्ञस्य विहितत्वात्तद्ज्ञस्य गुणहेतुत्वात् । तदुक्तम्—

अज्ञोऽर्चयेदेवार्चाया मन्यथादोषवान् भवेत् ।
ज्ञस्त्वर्चयन् सुगुणवानन्यथा दोपवान्न तु ॥ इति ।

निर्गुणभक्तिलक्षणं वक्ति । मद्गुणेति ।

मद्गुणश्रुतमात्रेण मयि सर्वगुणाश्रये ।
मनोगतिरविच्छिन्ना यथा गङ्गांभसोंबुधौ ॥

यथांबुधौ गंगांभसो गतिरविच्छिन्ना तथा मद्गुणश्रवणमात्रेण यस्य

सर्वगुणाश्रये सर्वगुणानामत्श्रयो निषेवणं यस्मिन् स तथा सर्वगुणमूर्ति-रित्यर्थः । तस्मिन् मयि मनोगतिरविच्छन्ना निरंतरा ॥११॥

लक्षणं भुक्तियोगस्य निर्गुणस्य ह्युदाहृतम् ।
अहेतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥१२॥

तेन क्रियमाणस्य निर्गुणस्य भक्तियोगस्य लक्षणमुदाहृतं हीत्यन्वयः । आत्यंतिकभक्तिलक्षणं ब्रूते । अहैतुकीति ॥१३॥

सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमित्युत ।
दीयमानं न गृह्णंति विना मत्सेवनं जनाः ॥१३॥

सार्ष्टि समानैश्वर्यं ।

स एव भक्तियोगाख्यः आत्यंतिक उदाहृतः ।
येनातिव्रज्य त्रिगुणान् मद्भक्तायोपपद्यते ॥१४॥

तद्भक्तिफलमाह । येनेति । येनात्यंतिक भक्तियोगेन त्रिगुणान् त्रि लिंगशरीरेन्द्रियाणि अतिव्रज्य अतिक्रम्य संत्यज्येत्यर्थः । मद्भावाय चिदानंददेहेन मयि सत्तात्यै औन्नत्यस्थित्मे उपपद्यते । योग्यो भवती-त्यर्थः ॥१४॥ एतादृशभक्त्युत्पत्तौ किं साधन मत आह—

निषेवितेनानिमित्तेन स्वधर्मेण महीयसेत्याद्युत्तरग्रन्थेन—
क्रियायोगेन शस्तेन नातिहिंस्रेण नित्यशः ॥१५॥

मद्धिष्ण्यदर्शन स्पर्श पूजा स्तुत्यभिवंदनैः ।
भूतेषु मद्भावनया सत्येनासंगमेव च ॥१६॥

महतां बहुमानेन हीनानामनुकम्पया
मैत्र्याचैवात्मतुल्येषु यमेन नियमेन च ॥१७॥

व्याख्या—निषेवितेनानिमित्तेन निष्कामेन नितरां सेवितेन अनिमित्त इति पाठे—यथाफलाभि संधिरहितो भवति तथा निषेवितेनेत्यर्थः। अष्टवर्षं ब्राह्मणमुपनीयेतेत्यादि वेदविहितेन स्वधर्मेण क्रियायोगेन भगवत्पूजालक्षणयोगेन कर्मयोगेन वा नातिहिंस्रेण प्राण्युपद्रवरहितेन ॥१५॥ मद्धिष्ण्यानां केशवादिप्रतिमानां दर्शनादिभिः भूतेषु जीवेषु अंतर्यामित्वेन मद्भावनया मम स्मरणलक्षणोपासनया सत्येन भूतहितेन वचसा असङ्गमेन दुर्जनसङ्गराहित्येन ॥१६॥ महतां स्वोत्तमानां बहुमानेन अर्चनेन हीनानां स्वाधमानामनुकम्पया तुल्येषु स्वसमेषु मैत्र्या मित्रभावेन ज्ञात्वा तद्रक्षणभावेनेत्यर्थः ॥१७॥

आध्यात्मिकानु श्रवणान्नामसंकीर्तनाच्च मे ।
आर्जवेनार्यसंगेन निरहंक्रियया तथा ॥

आध्यात्मिकानुस्मरणात् वेदान्तशास्त्रश्रवणात् आर्जवेनावक्रबुद्धित्वेन आर्याणां पंडितानां संगमेन निरहंक्रियया देहादावहं ममता वर्जनेन-

मद्धर्मेणापि यर्ह्येतैः परिसंशुद्ध आशयः ।
पुरुषस्यांजसाभ्येति श्रुतमात्रगुणं हि मां ॥१९॥

व्या मद्धर्मेणोर्ध्वपुंड्रादिधारणादिना । स्वधर्माद्यनुष्टानफलमाह । यर्हीति। पुरुषस्योपासकस्य यर्हि यदा कथितैरेतैर्धर्मादिभिरनुष्टितैः अंतःकरणमाशयः परितः शुद्धः स्यात्तदा अंजासा कालक्षेपमन्तरेण श्रुतमात्रगुणं केवलं गुणा एव श्रुता न दोषा यस्येति वा सः श्रुतमात्रगुणस्त-

ंजसा तत्वमागम्येतीत्यन्वयः ॥ 'गुणा श्रुताः सुविद्धाश्च देवे' इति वाक्यं 'हि' शब्दगृहीतम् ॥१९॥ परिशुद्धाशयस्य हरौ मनः प्रसादमाकारं वक्ति 'यथेति'।

यथावातरथो घ्राणमावृंक्ते गंध आशयात् ।
एवं योगरतं चेत आत्मानमविकारयन् ॥२०॥

यथाशयात् पुष्पादागत्य वातरथो वात एव मार्गो यस्य स तथा गन्धो घ्राणमावृंक्ते आवृणोति वशीकरोति। एवमुक्तसाधनाख्ययोगेन हरौ रतं यदविकारि विषयः विकाररहितं तच्चेतः आत्मानं हरिं प्रसादाभिमुखं करोतीत्यन्वयः। अनेन निर्गुणभक्तियोगवानात्यन्तिक-भक्तियोगवान् भूत्वा परमात्मापरोक्षवान् भवति, इत्युक्तमिति तद्व्याख्या ॥ तथाचैवं तामस, राजस, सात्विक, भेदभिन्नभक्ति-विलक्षणतया निर्गुणभक्तिस्वरूपमात्यंतिकभक्तिस्वरूपं च पूर्वोक्तसाधन-साध्यतया च ज्ञात्वा तादृशसद्भक्तिलाभार्थमधिकारी यतेतेत्याशयः। अनेनापि ग्रन्थजातेन सद्भक्तियोगस्य साधनवर्गेषु श्रैष्ठ्यमवगम्यत इति स्पष्टम्। भागवतैकादशस्कन्धे षड्विंशोऽध्याये भक्तेः साधनो-त्तमत्वमाह। भक्तिमिति। इति विजयध्वजीयावतरणिका।

भक्तिं लब्धवतः साधो किमन्यदवशिष्यते ।
मय्यनंतगुणे ब्रह्मण्यानंदानुभवात्मनि ॥

इत्युद्धवं प्रति श्रीकृष्ण वचनम्।

'ननु त्यागेनैकेऽमृतत्वमानशुः। कर्मणैव हि संसिद्ध-मास्थिता जनकादयः' इत्यादि विरोध इति चेन्न। विरोध

वचनेन सामान्यवचनस्य सावकाशस्याविरोधेन योजनीयत्वात्। सत्पात्र त्यागादिना ज्ञानभक्त्यादिकं सम्पाद्यामृतत्वमायन् इति। 'कर्मणा ज्ञानमातनोति। ज्ञानेनामृती भवती 'त्यादेः। उक्तं च सूत्र-भाष्येपि।

कर्मणात्वधमप्रोक्तः प्रसादः श्रवणादिभिः।
मध्यमो ज्ञानसंपत्या प्रसादस्तूत्तमो मतः॥
प्रसादात्त्वधमाद्विष्णोः स्वर्गलोकः प्रकीर्तितः।
मध्यमाज्जनलोकादिरुत्तमस्त्वेव मुक्तिदः॥
श्रवणं मननं चैव ध्यानं भक्तिस्तथैव च।
साधनं ज्ञानसंपत्तौ प्रधानं नान्यदिष्यते॥
न चैतानि विना कश्चिद्ज्ञानमाप कुतश्चनेति॥

प्रधानमित्यनेन प्रधानसाधनं कर्मादिति भावः। विपरीतं किं नस्यादित्यत उक्तम्। न चैतानीति। श्रवणादीनीत्यर्थः। कुतश्चन कानादेः ज्ञानस्य श्रवणान्वय व्यतिरेकित्वात्तदेव प्रधानसाधनं। कर्मादेस्तद्भावात्पारंपर्येण साधनमितिं भाव' इति। तत्वप्रकाशिका। अत्र ज्ञानपदेन पूर्णभक्तिरपि विविक्षिता। 'भक्त्यंशकं यतो ज्ञानं' 'ज्ञानस्य भक्तिभागत्वात्। अपरोक्षदृशा युक्ता सा पूर्णेत्यभि-धीयते' इत्युक्तत्वात्।

दानतीर्थतपोयज्ञपूर्वाः सर्वेपि सर्वदा।
अंगानि हरिसेवायां भक्तिस्त्वेका विमुक्तये॥

इति तात्पर्यनिर्णयोक्तेः । अत्र दानं पात्रत्यागः तीर्थं भागीरथ्यादि तपः चान्द्रायणादि यज्ञो जोतिष्टोमादिश्च पूर्वं येषांते तथा सर्वे उपायाः हरिसेवायां भक्तिरूपायामङ्गानि । भक्तिस्तु विमुक्तये मोक्षाय । एका स्वानंतरभाविसाधनांतरानपेक्षा उपाय इत्यर्थः । इति वरदराजीये ।

तारतम्यं ततो ज्ञेयं सर्वोच्चत्वं हरेस्तथा ।
एतद्विना नकस्यापि विमुक्तिस्स्यात् कथंचन ॥
पंचभेदांश्च विज्ञाय विष्णोः स्वाभेदमेव च ।
निर्दोषत्वं गुणोद्रेकं ज्ञात्वा मुक्तिर्न चान्यथा ॥
अवतारान् हरेर्ज्ञात्वा नावतारा हरेश्चये ।
तदावेशांस्तदा सम्यक्ज्ञात्वा मुक्तिर्न चान्यथा ॥
सृष्टिरक्षाहृतिज्ञान नियत्यज्ञानबन्धनात् ।
मोक्षं च विष्णुतस्त्वेव ज्ञात्वा मुक्तिर्न चान्यथा ॥
वेदाश्च पञ्चरात्राणि सेतिहासपुराणकान् ।
ज्ञात्वा विष्णुपरानेव मुच्यते नान्यथा क्वचित् ॥

एवं साधारणसाधनान्युक्त्वा असाधारणसाधनमाहेत्यवतरणिका वरदराजीये—

माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोधिकः ।
स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा ॥

इति भारततात्पर्यनिर्णयोक्तिरीत्या मोक्षसाधनीभूत ज्ञानभक्तिस्वरूपं भक्तेराधिक्यं च विज्ञायते । तथा वैराग्य स्वरूपमपि—

'तमेवैकं जानथाऽत्मानमन्यावाचो विमुंचथ'।

आब्रह्मस्तंबपर्यंतमसारंचाप्यनित्यकम् ।

विज्ञाय जातवैराग्यो विष्णुपादैक संश्रयः ।

'ब्राह्मणो निर्वेदमायात् '।

'त-लं बहुलाकविचिंतनया श्रवणं कुरु मानसमीशपदे'।

इत्यादिना सम्पाद्यतया प्रमापितम् । एतादृशज्ञानवैराग्ययोरपि 'अतिपरिपक्वाभिध' पूर्णभक्तिशरीरांतर्गतत्वेपि घटकमंतरा घटित स्वरूपस्यानिष्पत्तेर्घटित लाभार्थं घटकसंग्रहोप्यवश्यं सम्पाद्यः इति तात्पर्यम्। 'यमैवेष वृणुते' 'यस्य प्रसादात्परमार्ति रूपादस्मात्संसारान्मुच्यते नापरेणे'त्यादि श्रुत्यादिना प्रधानसाधनत्वेनावगत परमप्रसादस्य भक्त्यन्वयव्यतिरेकित्वादपि मुमुक्षुसंबन्धि साधनजातेषु भक्तेरेव प्राधान्यमित्यत्र प्रमाणमुक्तं च दशमतात्पर्ये। भक्तानुसार्यनुग्रहस्य। श्रुतिः।

"एष देवः परोऽजरोऽमरस्तं वा एनमाहुर्भक्त इति। भक्त्याहि सोऽनुगृह्णाति। भक्त्यैवेदं वृणुते श्रियं विरिंचं रुद्रं इन्द्रमापिपीलकम्। नाभक्तं वृणुते नाभक्तमनुगृह्णाति नाऽवरं वृणुते नाऽवरमनुगृह्णाति।

अथातो भक्तिमीमांसा भवति। युवास्यात्साधु युवाध्यायकः आशिष्टो दृढिष्टो बलिष्टः तस्येयं पृथिवी सर्वा वित्तेन पूर्णा स्यात्। स एषो मानुषो भक्तो भवति। ते ये शतं मनुषा भक्ताः स एको मानुषो गन्धर्वः। ते ये शतं मानुषा

गन्धर्वाः एतावान् देवगन्धर्वः । ते ये शतं देवगन्धर्वाः एतावान् चिरलोकः पैतृकः । ते ये शतं चिरलोकाः पैतृकाः । एतावांश्चिरलोको दैविकाः एतावत्यतात्त्विका देवताः । ते ये शतमतात्त्विकयो देवताः एतावती तात्त्विका देवता । यास्ते ये शतं तात्त्विक्यो देवता । एतावान् पुरुहूतः । ते ये शतं पुरुहूताः एतावान् वा व रुद्रः । ये ते शतं रुद्राः एतावन्वाव विरिंचिः । ते ये शतं विरिंचाः एतावती श्रीभक्त्या भवति ।

तद्यावती वाव भक्तिस्तावद्ज्ञानं भवति । यावद्वाव तद्ज्ञानं तावदानन्दो मौक्तिकोथैष एव परमानन्दो यो सौ हरिर्विश्वो विनोदोषनोदः संस्कारको विकारकोऽधिकारिकः एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवंति "। इति पौत्रायणश्रुतिः ॥

मिळितौ वा एतौ भगवतो यऽनुग्रहश्च भक्तिश्च योवानुग्रही स भक्तो यो भक्तः सोनुग्रही योवानुग्रहीतो ब्रह्मणा स भक्तो योभक्त स्तंवाव ब्रह्मानुगृह्णाति । या वान्वै ब्रह्मणोनुग्रहस्तावती भक्तिस्तावान्वै ब्रह्मणोनुग्रहः । प्रकृतो वै ब्रह्मणोनुग्रहः परमस्तदवरो वा व महति तदवरोथ रुद्रे तदवरोथ पुरुहूते । अथ देवर्षिपितृषु मनुष्येष्विति । धर्मश्रुतिः । इति ॥

एवमुदाहृत श्रुतिसमाख्यारूपेण प्रथमाध्यायस्य 'निर्णयश्लोक 'द्वयेमापि भक्तेर्विष्णुतुष्टिहेतुत्वेन ब्रह्मादि मुक्तदेवतातारतम्यकारणत्वेन च । भक्तेरेव मुक्तिप्रधानसाधनत्वमवगम्यते । श्लोकद्वयं च

भक्त्यैव तुष्टिमभ्येति विष्णुर्नान्येन केनचित् ।
स एव मुक्तिदाता च भक्तिस्तत्रैव कारणम् ॥
ब्रह्मादीनां च मुक्तानां तारतम्ये तु कारणम् ।
तारतम्यस्थितानादिनित्या भक्तिर्न चेतरत् ॥ इति ।

सकलसच्छास्त्राणां भगवद्भक्तिसम्पादना एव मुख्यं तात्पर्यम् । तथाहि मोक्षफलकत्वेन शास्त्रस्यारंभणीयत्वम् । मोक्षश्च मोचकप्रसादायत्तः । तत्प्रसादस्तु तद्भक्त्यैकसाध्यः । 'भक्त्यैव तुष्टिमभ्येती'-त्यादेः भक्तिश्च भगवद्गुणोत्कर्षज्ञानात् । 'भक्त्यर्थं भगवन्महिमोक्ति'रिति मूलोक्तेः । तथा च भगवत्प्रीति भगवद्भक्त्युत्पादनद्वारा मोक्षं साधयता शास्त्रेण वेदादिना भगवत्प्रीत्युद्बोधक भगवद्भक्त्योषैयिक भगवन्महिमैव प्रतिपादनीय इति तेषां तत्रैव मुख्यं तात्पर्यम् ।

'सर्वोत्कर्षे देवदेवस्य विष्णोर्महातात्पर्यं विद्यतेऽन्यत्र सत्यम् । अनंतरं तत्परत्वं तदन्यत्सर्वागमानां पुरुषार्थस्ततोतः' इति । तथाच—

'न तादृशी प्रीतिरीड्यस्य विष्णोर्गुणोत्कर्षज्ञातरि यादृशी स्यात् । तत्प्रीणनान्मोक्षमाप्नोति सर्वस्ततो वेदास्तत्पराः सर्व एव । इति च श्रुतेः ॥

अत्र ज्ञानस्य भक्तिभागत्वाद्गुणोत्कर्षज्ञानं भक्तिरूपमेव । अथवा विष्णोर्भक्तिपूर्वकं गुणोत्कर्षज्ञातर्येव प्रीतिर्लोकदृष्टांतानुसारेणा-प्युक्तेति च 'भक्त्या प्रसन्नः परमो' 'भक्त्यैव तुष्टिमभ्येति'

इत्यादिनां चा अर्थोवगन्तव्यः। तथाच। 'अयं भगवत्प्रियः भगवद्भक्तिमत्वात् यो यद्भक्तिमान् स तत्प्रियः। भगवद्भक्तः भगवत्प्रीतिविषयः भगवद्भक्तिपूर्वक भगवद्गुणोत्कर्षानुवादित्वात्। यो यस्मिन् स्नेहपूर्वकं यद्गुणोत्कर्षानुवादकः स तस्य प्रीतिविषयः यथा सम्प्रतिपन्नः' इत्यनुमानंचात्रमानम्।

न दोषज्ञातरि प्रभोः प्रीतिर्दृष्टा किंतु स्वस्मिन् द्वेषपूर्वकं स्वदोषानुवादके शिक्षामेव करोति राजेत्यवगम्यते लोके। यथोक्तम्-

घातयंति हि राजानो राजाहमिति वदंतम्।
ददति च सर्वमभीष्टं गुणोत्कर्षं वदतः॥ इति।

तथा मुक्तिर्मोचकभगवत्प्रसादमात्रसाध्या भगवत्प्रसादाभावव्यापकाभवप्रति योगित्वात्। यो यदभावव्यापकाभावप्रतीयोगी स तत्साधकः यथा धूमोऽग्निसाध्यकस्तत्कार्यत्वादेव तदभाव व्यापकाभावप्रतियोगि प्रसिद्धः इति। तथा साक्षान्मोक्षसाधनभगवदत्यर्थप्रसादः भगवद्भक्तिमात्रसाध्यः। मुक्तिभिन्नत्वे सति भगवद्भक्त्यभावव्यापकाभावप्रतियोगित्वात्। यत् यद्व्यापकव्यापकभिन्नं सत् यदभावव्यापकाभावप्रतियोगि तत्तत्साध्यकम्। यथासवाक्यत्वं वाक्यत्वावछिन्न प्रामाण्यसाध्यकम्। अत्र भगवद्भक्तिमात्रसाध्यत्वाभाववति मुक्तिरूपपुरुषार्थो भक्त्यभाव व्यापकाभाव प्रतियोगित्वाद्व्यभिचारः। इति न वाच्यम्। भक्तिव्यापक प्रसादव्यापके मुक्तिरूपार्थे स्वस्मिन् स्वनियोगिकभेदाभावेन न मुक्तिभिन्नत्वनिवेशनेनैव व्यभीचाराभावात्। उक्तानुमान-

त्रयस्य पूर्वेति श्रुतिस्मृत्यनुग्राह्यतया पक्षधर्मताव्याप्तिसध्यतया बलव-त्वान्नकाचिदनुपपत्तिरिति । 'योवानुग्रही स भक्तो योभक्तः सोऽनुग्रही' इत्युदाहृत श्रुतेः ॥

किंतु एकादशस्कन्ध द्वादशाध्याये विजयध्वजीये । भगवद्गुणोत्कर्षज्ञानपूर्विका भक्तिरेव परमपुरुषार्थांतरंगामितीमयर्थं समर्थयते ।

तत्रादौ गुणोत्कर्षज्ञानानुरक्तयोगादीनां विविक्षितपुरुषार्थ-साधनत्वं न भवतीत्याह नरोधयतीति ॥

श्रीभगवानुवाच—

न रोधयति मां योगो न सांख्यं धर्म एव च ।
न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं च दक्षिणाः ॥
व्रतानि यज्ञाः छंदांसि तीर्थानि नियमा यमाः ।
यथावरुंधेन्मत्संगः सर्वदुःखापहो हि मां ॥

योगो ध्यानं रोधयति वशीकरोति त्यागो दानं यथा मयि सङ्गः गुणसम्प्रीतिपूर्विकां सर्वपूर्णगुणत्वमतिर्यथा मामवरुंधेद्वशीकरोति । तथा योगादयो नरोधयंति ।

सङ्गस्तु गुणसंप्रीतिगुणवत्वेति निश्चयात् ।
सचेद्धरौ भवेत्तेन मुच्यते नात्र संशयः ॥
अपरोक्षदर्शेर्हेतु र्भवेत्सस्याद्यदि क्षमः ।
अन्यथा सुखभागेव मद्दर्शिमोक्षकारणम् ॥

इति तात्पर्यवचनादुक्त एवार्थः न तु सम्बन्धमात्रम् ।

तथा—

ज्ञात्वापि हरिविद्वेषी तमो याति न संशयः ।
विशेषरूपस्याज्ञोपि गुणवत्वेति निश्चितः ॥
गुणसंप्रीतिमान्नित्यं तं दृष्ट्वा मुक्तिमेष्यति ।
अथवा सुखभागेव स्याद्यावद्दर्शनोपगः ॥

इति व्यक्ते ।

हरिसङ्गविहीनस्तु हरेर्दर्शनवानपि ।
न मुच्यतेऽखिलज्ञोपि तमो याति विनिश्चयात् ॥
गुणैरन्यैर्विहीनोपि तद्भक्तेष्वपि चक्रमात् ।
सङ्गवान् सुखभागेव स्याद्गुणैर्मुक्तिमेति वा ॥
स्वभक्तसङ्गहीनस्य व्युत्क्रमात्संगिनोपि वा ।
स्वसङ्गविघ्नकृद्विष्णुस्तज्जनेषु च तत्र च ॥

सत्संगे इति तमेव तात्पर्याच्च भक्तेराधिक्यावगमः । तथा तत्तात्पर्यैक भागवतमूलेनापि भक्तेराधिक्यम् । यथोक्तम्—

मत्संगेन हि दैतेयाः यातुधाना मृगाः खगाः ।
गन्धर्वाप्सरसो नागाः सिद्धाश्चारणगुह्यकाः ॥१॥
विद्याधरा मनुष्येषु वैश्याः शूद्रास्तथांत्यजाः ।
रजस्तमप्रकृतयस्तस्मिंस्तस्मिन् युगेऽनघ ॥२॥
बहवो मत्पदं प्राप्तास्त्वाष्ट्रकावंतिकादयः ।
वृषपर्वा बलिर्बाणो मयश्चाथ विभीषणः ॥३॥

सुग्रीवो हनुमानृक्षो गजो गृध्रो वणिक्पथः ।
व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथापरे ॥४॥
ते नाधीतश्रुतिगणा नोपासीत महत्तमाः ।
अव्रतातप्ततपसो मत्सङ्गान्मामुपागताः ॥५॥
केवलेन हि भावेन गोप्यो गावः खगा मृगाः ।
येऽन्ये मूढधियो नागाः सिद्धा मामीयुरंजसा ॥६॥

व्याख्या— इति ।

भगवानुक्तमर्थं प्रख्यापयति । मत्संगेनेति । दैत्येयाः प्रल्हादादयः बहवो मत्संगेन मद्गुणसंप्रीतिलक्षणभक्तिसंबंधेन मत्पदं प्राप्ताः त्वाष्ट्रको वृत्रः अवंतिको अवधूतो भिक्षुः । यातुधान इत्याद्युक्तं श्रुङ्ग्राहकतया दर्शयितुं विभीषण इत्यादिषु पुनर्वचनम् । वणिक् तुलाधारः मयोनामशूद्रः । ते गोप्यादयो मामुपागता इत्यन्वयः ॥३-४-५-६॥ साधनं विना त्वामुपगताश्चेत्सर्वे किं नाप्नुवंतीत्यत्राह । मत्संगादिति । गुणसम्प्रीतिरपि न वेदादिभ्य उत्पन्नेत्याह । नाधीतेति । तर्हि केनेत्यत आह । केवलेनेति । केवलेन निर्दोषेण । भावेन भक्तियोगेन केवलेनेति विशेषणान्न द्वेषयुक्ता भक्तिर्मुक्तिसाधनम् ।

'ज्ञात्वापि हरिविद्वेषी तमो याति न संशयः ।'

इति वचनात् ।

भावेनापरोक्षज्ञानोत्पादक स्वभावेनेति विशेणाद्विशेषरूपाज्ञानेपि मोक्षो नियतः । विशेषरूपस्याज्ञोपीत्युक्तेः । ज्ञानोत्पत्तेः पूर्वमपि भगवल्लीलाद्यनुकारेण परमानन्दः स्यादित्यतो भावेनेति ।

'अथवा सुखभागेव स्याद्यात्रदर्शनोपराः'। इति। भक्तिरहितं ज्ञानमपि न मत्प्रापकम्। किमुतान्यत्साधनजालमिति भावेनाह यमित्युत्तरत्रग्रंथेन।

तथा—भागवतैकादशे विंशोध्यायांतिमभागे—

प्रोक्तेन भक्तियोगेन भजतो मां सकृन्मुनेः।
कामा हृदिस्था नश्यंति सर्वे मयि हृदिस्थिते ॥३०॥

भिद्यन्ते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः।
क्षीयंतेचास्य कर्माणि मयि दृष्टेऽखिलात्मनि ॥३१॥

तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः।
न ज्ञानान्नचवैराग्यात्प्रायः श्रेयो भवेदिह ॥३२॥

यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत्।
योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥३३॥

सर्वं मद्भक्तियोगेन मद्भक्तो लभतेञ्जसा।
स्वर्गापवर्गं मद्धाम कथंचिद्यदि वांछति ॥३४॥

न किंचित्साधिनो धीरा भक्ताह्येकांतिनो मम।
वांछंत्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥३५॥

नैरपेक्ष्यं परं प्राहुर्निश्रेयसमकल्मषम्।
तस्मान्निराशिषो भक्तिर्निरपेक्षस्य मे भवेत् ॥३६॥

नमय्येकांतभक्तानां गुणदोषोद्भवा गुणाः।
साधूनां समचित्तानां बुद्धेः परमुपेयुषाम् ॥३७॥

एवमेतान्मयादिष्टाननुतिष्टंति मे पथः ।
क्षेमं विंदंति मत्स्थानं यद्ब्रह्म परमं विदुः ॥३८॥

अनेनापि 'भक्तियोगस्य प्राधान्यं' ज्ञायते । तत्रैव चतुर्दशाध्याये ॥ व्या ॥

भक्तिप्रधानधर्मादीनां तत्साधनवद्भक्तेरपि तत्सहिताया एव तत्साधनत्वमत्राह । भक्त्येति ॥

भक्त्याहमेकया ग्राह्यः शुद्धयात्मा प्रियःसतां ।
भक्तिः पुनाति मन्निष्ठा सक्काममपि सम्भवात् ॥२१॥

भक्ते प्राधन्येगुणांदर्शनात् कथंतदुन्नतिरुच्यत इति तत्राह ॥ भक्तिरिति ॥ सम्भवात् जाननादिरूपसंसारात् । यद्वा स्वोतत्यनंतरमेव पुनाति । न तु कालक्षेपेण ॥२१॥ भक्तिनायकहीनानां धर्मादीनानप्रयोजकत्वमर्थादुक्तन् । अधुना तत्प्रकाशयति । धर्म इति ।

धर्मः सत्यदयोपेता विद्या वा तपसान्विता ।
मद्भक्त्यपेतमात्मानं न सम्यक्प्रपुनातिहि ॥२२॥

'हि' शब्दो 'नायमात्मा प्रवचनेन लभ्यः' इति श्रुतिं सूचयति । यद्यपि महांतो वैष्णवसिद्धांतालत्वादि व्रतेनास्य भक्तिरस्तीति जानते तथापि बाह्यानां सुबोधाय भक्तेः प्रत्यक्षलक्षणान्याह ॥ कथमिति ।

कथं विना रोमहर्षं द्रवता चेतसा विना ।
विनानंदाश्रुकळया शुद्ध्येद्भक्त्या विना शमः ॥२३॥

एवमेतान्मयादिष्टाननुतिष्टंति मे पथः ।
क्षेमं विंदंति मत्स्थानं यद्ब्रह्म परमं विदुः ॥३८॥

अनेनापि 'भक्तियोगस्य प्राधान्यं' ज्ञायते । तत्रैव चतुर्दशाध्याये ॥ व्या ॥

भक्तिप्रधानधर्मादीनां तत्साधनवद्भक्तेरपि तत्सहिताया एव त्तत्साधनत्वमत्राह । भक्त्येति ॥

भक्त्याहमेकया ग्राह्यः श्रुद्धयात्मा प्रियःसतां ।
भक्तिः पुनाति मन्निष्टा सकाममपि सम्भवात् ॥२१॥

भक्ते प्राधन्येगुणांदर्शनात् कथंतदुन्नतिरुच्यत इति तत्राह ॥ भक्तिरिति ॥ सम्भवात् जाननादिरूपसंसारात् । यद्वा स्वोत्पत्यनंतरमेव पुनाति । न तु कालक्षेपेण ॥२१॥ भक्तिनायकहीनानां धर्मादीनामप्रयोजकत्वमर्थादुक्तम् । अधुना तत्प्रकाशयति । धर्म इति ।

धर्मः सत्यदयोपेता विद्या वा तपसान्विता ।
मद्भक्त्यपेतमात्मानं न सम्यक्प्रपुनातिहि ॥२२॥

'हि' शद्बो 'नायमात्मा प्रवचनेन लभ्यः' इति श्रुतिं सूचयति । यद्यपि महांतो वैष्णवसिद्धांतात्त्वादि व्रतेनास्य भक्तिरस्तीति जानते तथापि बाह्यानां सुबोधाय भक्तेः प्रत्यक्षलक्षणान्याह ॥ कथमिति ।

कथं विना रोमहर्षं द्रवता चेतसा विना ।
विनानंदाश्रुकलया शुद्ध्येद्भक्त्या विना शयः ॥२३॥

समीचीनभक्तियुक्तः पुरुषोपि सर्वं पुनाति किंपुनर्भक्तिरित्याशयेनाह । वाग्गद्गदेति ।

वाग्गद्गदा द्रवते यस्य चितम् ।
रुदत्यभीक्ष्णं हसति क्वचिच्च ॥
विलज्ज उद्गीयति नृत्यते च ।
मद्भक्तियुक्तोभुवनं पुनाति ॥२४॥

अत्र—

चित्तद्रवस्तथा धैर्यं प्रसादो भक्तिलक्षणः ।
आधिक्येन तु तत्रापि स्थैर्यमेव विशेषतः ॥
दम्भस्य चलभक्तेश्च यस्माद्रुश्यादिकं भवेत् ।
दम्भादि परिहारार्थं निगृह्णीयाच्च धीरधीः ॥
अत आध्यात्मिकैः क्लेशैराधिभूताधिदैवतैः ।
वाक्यैश्च वेदतन्त्राद्यै रुपदेशैश्च तादृशैः ॥
* बलवच्छाशनैर्वापि यस्य भक्तिर्नचाल्यते ।
स एव परमो भक्तो विष्णोर्हृदयवल्लभः ॥

* ॥ प्रह्लादवत् ॥ इति तात्पर्योक्ताविशेषाश्च ग्राह्याः ।

भक्तिः पुनातीत्युक्तम् । तत्र शुद्धिप्रकारं सदृष्टांतमाह । यथेति—

यथाग्निना हेममलं जहाति ।
ध्मातं पुनः सम्भजते च रूपम् ॥
आत्मा च कर्मानुशयं विधूय ।
मद्भक्तियोगेन भजत्यथो मां ॥२५॥

अग्निना मुखवायुसंयोगेन ज्वलितेन ध्मातं दाहविशेषं प्राप्तं हेममलं अष्टादशदोपलक्षणं स्वरूपं निर्दोषभास्वरलक्षणं आत्मा सत्वभावो जीवो अनाद्यविद्याकामकर्मकलिलं कर्मानुशयमन्तःकरणं भक्तियोगेन विधूय निर्मलीकृत्य अथो मङ्गळमूर्तिं मां भजते इत्यन्वयः।

अनेन ग्रंथेनापि परिपक्वभक्तिलक्षणं 'भक्तेराधिक्यं तत्फलम्' च स्पष्टम्। तथा—

जिज्ञासोत्थज्ञानजात्तत्प्रसादादेव मुच्यते।
'यतो नारायणप्रसादमृते न मोक्षः'

अतो, 'जिज्ञासा, निदिध्यासन, परमेश्वरानुग्रह, तद्दर्शन, परमभक्ति, परमानुग्रह द्वारा, मोक्षसाधनत्वात्कर्तव्येति' सुधोक्तरीत्या च परमभक्तेस्तदितर मुमुक्षु संबंधि साधनकूटेष्वाधिक्यं परम प्रसादांतरंगसाधनत्वेनावगम्यते। भक्तिषु साधारण, पक्व, परिपक्व, अतिपरिपक्व भेदेन चातुर्विध्यस्य प्रमितत्त्वात्तेषां प्रावल्य क्रमेण लक्षणानि।

टीकोक्तिमुपजीव्यैव भक्तेर्लक्षणमुच्यते।
अतो न मे भयं क्वापि सतां संसदि विद्यते ॥१॥

योग्यापरोक्षाभिव्यंग्यत्वे सति भगवदत्यर्थप्रसादांतरंगसाधनत्व 'मति परिपक्वभक्तियोग'स्य लक्षणम्। अत्र योग्यापरोक्षस्यापि प्रसादसाधनत्व मोक्षसाधनपर सावकाश वाक्यानुरोधेनातिव्याप्तिशङ्कापंकवारणाय सत्व अस्य प्रसादद्वारा मोक्षसाधनत्वेमि मुमुक्षुसंबंधि साधनजातेष्वतिपरिपक्वभक्तियोग एव मोक्षसाधनमिति न्यायदीपिकोक्तिः प्रमाणम् ॥

मोक्षंप्रति साक्षात्साधन भगवदत्यर्थप्रसादांतरंगसाधनत्वमेव 'परमभक्ते'र्लक्षणम् । न भगवद्दृष्टावतिव्याप्तिः । अतिपरिपक्व-भक्तिव्यञ्जनद्वारैव प्रसादसाधनत्वेनोपचरितायास्तद्दृष्टेः साक्षात्साधनत्वाभावात् । तथा साक्षाद्दृष्टिसाधनत्वं परिपक्वभक्तेर्लक्षणम् । तद्ध्याने‍ऽतिव्याप्तिः । तस्य परिपक्वभक्तिसाधनत्वेन साक्षाद्दर्शनसाधनत्वाभावेन तस्य दर्शनसाधनत्वोक्तेरौपचारिकत्वात् । साक्ष.त्तत्वज्ञानसाधनत्वम् पक्वभक्तियोगस्य लक्षणम् । न च श्रवणादावतिव्याप्तिः । तस्य पक्वभक्तियोगजननद्वारा ज्ञानसाधनत्वेन साक्षात्साधनत्वाभावात् । श्रवणादिसाधनत्वं साधारणभक्तेर्लक्षणं । अत्र न्यायदीपिकायां ।

भक्त्या प्रसन्नः परमो दद्याद्ज्ञानमनाकुलम् ।
भक्तिं च भूयसीं ताभ्यां प्रसन्नो दर्शनं व्रजेत् ।
ततोपि भूयसीं भक्तिं दद्यात्ताभ्यां विमोचयेत् ।
स्नेहोभक्तिरिति प्रोक्तः सर्वोपायोत्तमोत्तमः ।
तेनैव मोक्षो नान्येन दृष्ट्यादिस्तस्य साधनम् ॥ इति

श्रुति व्याख्यानंतर भावार्थप्रतिपादनपरं टीकावाक्यम् । अतिपक्व-भक्तियोग एव मोक्षसाधनम् न भगवद्दृष्टिः । सातु तत्साधनत्व-न्मोक्षसाधनत्वेनोच्यते । परिपक्वभक्तियोग एव दृष्टिसाधनं, न तु ध्यानं, तत्तुतत्साधनमिति दृष्टिसाधनतयोच्यते । पक्वभक्तियोग एव ज्ञानसाधनम् । न तु श्रवणादि । तत्तुतत्साधनया ज्ञानसाधनत्वेनोच्यत इति भावः । इति । तथा—

प्रसादभिन्नत्वे सति। (स्वतंत्रसाधनत्वे सति) मुमुक्षुसंबंधि-साधनांतर नैरपेक्ष्येण मोक्षससाधनत्वं च 'परमभक्तिलक्षणं'। स्वतंत्रसाधने भगवत्प्रसादेऽतिव्याप्तिवारणाय तद्भिन्नत्व निवेशः। प्रसादभिन्नज्ञानादि साधनेऽतिव्याप्तिवारणाय मुमुक्षुसंबंधिसाधनांतर-नैरपेक्ष्येणेति। पूर्वोक्तरीत्या मोक्षसाधनीभूत भक्तिस्वरूपं तु तामस, राजस, सात्विक, निर्गुणात्यंतिक भेदाभिन्नतया प्रोक्तेषु भक्तिपञ्च-केषु निर्गुणभक्तिसाध्यकात्यंतिक भक्तेःस्वरूपमाभास भक्ति विलक्षण-तया अपरोक्षसंपादकत्वेन च ज्ञात्वा तादृशात्यंतिकभक्ति र्व्यंग्याति-परिपक्वतापन्नत्वेन सद्भक्तिवाच्यतया प्रसादांतरंगसाधनतया च नव-विधहरिद्वेष त्रिविधगुरुद्वेषान्यतरद्वेषासमानाधिकरणतया च श्रीहरि-भक्ततारतम्यानुगुण भक्तिसाहित्येन च ज्ञातव्यमित्युक्तं भवति।

एव मखिलसाधनश्रेष्टत्वे भक्तियोगस्य ज्ञानयोगसाम्यभिधायक 'तृतीयतात्पर्यांत्यभागोदाहृत वचनविरोधः' यथोक्तम् —

ज्ञानभक्तिंविना नैव मुक्तिः कस्यापि विद्यते।
तयोरेकतरेणापि विष्णुगेनोभयंविना ॥
एवमेव तयोरेकभावेऽन्यनियतेर्ध्रुवम्।
एकेनापि भवेन्मुक्तिस्तदर्थं त्वन्यसाधनम् ॥

इति हरिवंशेषु।

अतैतत्तात्पर्यं भागवत श्लोकस्तु। अवश्यज्ञानानुष्टनार्थं येन विना मुक्तिमात्रं नस्यात्तत्साधनं निर्दिशति। 'ज्ञानमितीति'।

ज्ञानयोगश्च मन्निष्टो नैर्गुण्यो भक्तिलक्षणः ।
द्वयोरप्येकएवार्थो भगवच्छब्द लक्षणः ॥ इति ।

तदर्थस्तु–यो नैर्गुण्यो भक्तिलक्षणो योगो यच्च ज्ञानं ज्ञानयोगस्तयोर्द्वयोरप्येक एवार्थो विषयः । सः क ? इति तत्राह–

भगवच्छब्देति । भगवच्छब्दवाच्य इत्यर्थः । भक्तिज्ञानयोगयोरैश्वर्याद्यनंतगुणपूर्ण श्रीनारायणो विषय इति। भक्तिज्ञाने मुक्तेरवश्यसाधनतयोपदिष्टे इति कपिलमूर्तिवचनम् ॥

अत्र द्वयोर्योगयोरप्येकप्रयोजकत्वेनेकेनैवसाधनेनालं भक्तिज्ञानयोरन्यतरवैयर्थ्यमिति प्राप्तेऽभिप्रायः एतत्प्रमाणेनैवोक्तः आचार्येण । ज्ञानभक्तोति । ज्ञानभक्ती विना कस्यापि मुक्तिर्न विद्यते इत्यर्थः । उभयं ज्ञानभक्त्याख्यम् । उभयं विना । तयोर्ज्ञानभक्त्येक्त्योर्मध्ये एकतरेण ज्ञानेन वा भक्त्याख्येन वा विष्णुगेन विष्णुविषयकेणापि नैव मुक्तिरित्यर्थः । कोर्थस्तर्हि ज्ञानभक्त्योरेकेनापि मुक्तिरित्यस्येत्यत उक्तम् । एवमपीति । एतयोर्ज्ञानभक्त्योरेकतरभावे अन्यनियतेः ज्ञानभक्त्योः समव्याप्तत्वादित्यर्थः ॥ तदर्थं ज्ञानभक्त्यर्थमन्य मन्यसाधनजातमित्यर्थः । तेन द्वयोर्भक्तिज्ञानयोरेकप्रयोजनकत्वेऽपि नैकस्य वैय्यर्थं । एकेन विना एकस्य पुरुषार्थाहेतुत्वादिति भावः । इति ।

तथा चैवं ज्ञानयोगनैर्गुण्यभक्तियोगयोरेकप्रयोजनकत्वसमव्याप्तत्वाभिधायकवचनं तु निर्गुणभक्तिरूपस्यात्यंतिकभक्तिजन्या-

परोक्षज्ञानोत्तरकालीन तदभिव्यंग्यातिपरिपक्वभक्तेराधिक्यवचना-विरुद्धमिति संतोष्टव्यम् ।

अनेन ' निर्गुणभक्तियोगवान् आत्यंतिकभक्तियोगवान् भूत्वा परमात्मापरोक्षवान् भवती 'त्युक्तम् । इति तृतीये त्रिंशोऽध्याये विंशतिश्लोक विजयध्वजीय व्याख्यान सद्भावात् । अत्रैव षट्-त्रिंशतितमश्लोकस्तु ।

भक्तियोगश्च योगश्च मया मानावुदाहृतः ।
ययोरेकतरेणैव पुरुषः पुरुषं व्रजेत् ॥ इति । व्याख्या—

एतद्द्वयमेव पुरुषार्थसाधनं नान्यदिति निर्धारयति ययोरिति । ययोर्ज्ञानभक्त्योरेकतरेणैव ज्ञानयोगेनैव पुरुषः पुरुषं परमात्मानं व्रजे-दित्यन्वयः । एकतरोलं चेदितरविधानं व्यर्थं स्यात् । एकतराभावे-ऽन्यतरस्य नियतत्वात् एकतरेणैवेत्युक्तम् । धूमाग्न्योरिवाविना-भावात् इति ॥ विजयध्वजतीर्थीयं वचनम् । अग्न्यविनाभूतत्वं धूमस्येतिवत् भक्त्यविनाभूतत्वं ज्ञानयोगस्येति तात्पर्यमव-गम्यते । अत्र द्वयोरनयोरविनाभावकथनं नसाम्यज्ञापकम् । धूमाग्नि-दृष्टांत बाधात् । तथा तात्पर्यटीकोत्तरीत्या तयोः समव्याप्तत्वाभिधान-मेकप्रयोजनकत्ववचनमपि न साम्याभिधानतात्पर्यकम् । तयोरावश्य-कत्वप्रतिपादन एव तत्तात्पर्यावगमात् ।

' उत्तमो भक्तियोगस्तु ज्ञानयोगस्तु मध्यमः । अधमा कर्मयोगश्चे 'त्येकादशतात्पर्ये विंशोध्यायोदाहृतविरोधात् । तयोर-साम्यमिति । अत्रैव तृतीयतात्पर्ये ।

तत्रस्थावरमुक्तेभ्यो वरा जंगममुक्तकाः ।
तेभ्यो मानुषमुक्ताश्च विप्रमुक्तास्ततोधिकाः ॥
तत्वोपदेशमात्रेण मुक्तेभ्यो वेदवेदिनः ।
अर्थज्ञाः ऋषयस्तेभ्योऽतो देवाः संशयच्छिदः ॥
पूर्णधर्मा ततस्त्विंद्रा निःसंगो गरुडस्ततः ।
भक्तिपूर्णो हरेर्ब्रह्मा तस्मान्नान्योधिकस्ततः ॥
मुक्तौ वा संसृतौ वापि सम्यगेषु हि ते गुणाः ।

इति कापिलेये । इति । अत्रापि चतुर्मुखब्रह्मणः भक्तिपूर्णत्वात्सर्वा-कार्युत्तमत्वोक्त्या 'भक्तेरेवेतरसाधनकफलापेक्षया 'प्राधान्यमव-गतमेतत्तात्पर्यकभागवत श्लोकेनपि ।

अर्थज्ञात्संशयच्छेत्ता ततः श्रेयान् स्वधर्मकृत् ।
मुक्तसंगस्ततोभूयानदोग्धा धर्ममात्मनः ॥
तस्मान्मय्यर्पिताशेषक्रियार्थात्मरतिर्नरे । इति ।

वेदार्थसंशयच्छेत्ता देवः । जातावेकवचनम् । स्वस्य स्वतन्त्रस्य हरेः धर्मं करोतीति स्वधर्मकृत् । त्रैलोक्यरक्षणलक्षणपूर्णा धर्मकर्तृत्वादिंद्रः । मुक्तसंगो गरुडः । अस्यविवरणम् । न दोग्धेति । आत्मनः स्वस्य धर्मं न दोग्धा भगवत्प्रसादमन्तरेण कर्मफलमनाकंक्षमाणो भूयानुत्तमः । तस्माद्गरुडः मय्यर्पिताशेषक्रियार्थश्च मय्यर्पितसमस्तक्रियाफलश्च आत्म-रतिश्च मय्येन मनोरतिश्च समर्पिताशेषक्रियार्थात्मरतिः । भक्त्या न रीयते न क्षीयते इति नरः । पूर्णभक्तिः ब्रह्मा श्रेष्टः पूर्वोक्तेभ्य इव चतुर्मुखब्रह्मणो मुत्तमोस्ति किं ? नेत्याह । मयीति ।

तस्मात्तत्साधनवतां तारतम्येन साधनतारतम्यं तत्रापि भक्तेरेव चतुर्मुखसंबंधिन्यास्तदीयोत्कर्षप्रयोजकत्वोक्त्योत्तमत्वं च स्व सजातीयेषु चतुर्मुखदृष्टांतेनापि सुशकं साधियितुम् ॥

भक्तिः । स्वसजातीयेषूत्तमा श्रीशान्यत्वेसति स्वानन्तरभावि स्वसजातीयानपेक्षत्वात् । यथाधिकार्युत्तमत्वे ब्रह्मेति । अत्र पक्षे साजात्यं मुमुक्षुसंबंधित्वेन दृष्टांतं चाधिकारित्वेन विवक्षितम् । दृष्टांते साध्यसाधनसम्प्रतिपत्तौ ' ॐ वियदामननात् ॐ । इति सूत्रम् । तथात्रोदहृतं तात्पर्यवचनम् ।

भक्तिपूर्णोहरेर्ब्रह्मा तस्मान्नान्योधिकस्ततः । इतित्पक्षेच
' भक्तिर्मोक्षाय केवला ' । ' नैवान्यसाधनं भक्तिः ' ।
' भक्तिस्तेका विमुक्तये ' । इत्यादिकं साध्यसाधनार्पकं भवति ।

श्रीत्वेनेशत्वादिना स्वसजातीयस्यैवाप्रसिध्या तदुत्तमत्वाभववतोः श्रीशयोः स्वानन्तरभावि स्वसजातीयाभावेन तदनपेक्षत्वं विद्यत इति व्यभिचारस्तद्वारणाय श्रीशान्यत्वस्य हेतुघटकत्वम् । श्रवणादौ व्यभिचारवारणाय स्वानन्तरभावि स्वसजातीयानपेक्षत्वेति । यद्वा आधिकारिकत्व मुमुक्षुसंबंधिसाधनत्वान्यतरत्वे सति । इति हेतुविशेषणम् । घटादौ मुमुक्षुसाधनत्वाभावान्नातिप्रसंगः । दृष्टांतीकृते चतुर्मुखे धधिकत्वेनोपपत्तिः । तथा भगवद्भक्तिरेव सर्वस्वजातीयसाधनेषुत्तमा । सर्वज्ञकल्पैः श्रीमद्धनुमदादिभिरभ्यर्थनीयत्वात् । यत्प्रेक्षावद्भिरभ्यर्थनीयं तच्छ्रेष्टं यथा परब्रह्मेति । मध्यमाधिकारिणांमुख्यनिवेतिवा ।

प्रेष्टो न रामस्य बभूव तस्मा-
न्नरामराज्येऽसुलक्ष्यं च किंचित् ।
तत्पादसेवारतिरेव नैच्छ-
त्तथापि भोगान्मनु सा विरक्तिः ॥
इति श्रीमध्वविजये ।

उक्तं च श्रीमन्महाभारततात्पर्यनिर्णयेपि ।—

प्रवर्धतां भक्तिरलं क्षणे क्षणे
त्वयीश मे ह्रासविवर्जिता सदा ।
अनुग्रहस्ते मयि चैवमेव
निरूपधौतौ मम सर्वकामः ॥ इत्येवम् ।

श्रीहनुमता श्रीरामचन्द्रं प्रति । तथा भगवद्भक्तस्यैव भगवत्प्रिय-त्वोक्त्या च भगवद्भक्तेराधिक्यं युक्तं चोपादेयम् । तथाहि ।

तथायं भगवत्प्रियः । भगवद्भक्तिमत्वात् । यो यद्भक्ति-मान् स तस्यप्रियः । यथा संप्रतिपन्नः । 'भक्तप्रियं सकल-लोकनमस्कृतं च ।' 'भक्त्यैव तुष्यति हरिप्रवणत्वमेव सर्वस्य धर्मः' । इति भारतनिर्णयोक्तेः । तथा ॥

'भक्त्यैव तुष्टिमभ्येति विष्णुर्नान्येन केनचिदि'ति तत्रैवोक्तेः । दशमतात्पर्योदाहृत श्रुतिरप्येतदनुमानुग्राहिकास्ति ॥

'एष देवः परोऽजरोऽमरस्तं वा एनमाहुर्भाक्त' इति । भक्त्याहि सोऽनुगृह्णाति । भक्त्यैवेद वृणुते श्रियं विरिंचं रुद्र

इन्द्रमापिपीलिकम् । नाभक्तं वृणुते नाभक्तमनुगृह्णाति यावान्वात्र स भक्तः स्तावद्व्यैष वृणुते । तावद्वैषोनुगृह्णाति । नाधिकं वृणुते नाधिकमनुगृह्णाति नावरं वृणुते नावरमनुगृह्णाति । इति श्रुतिः ।

तथैवायं भगवद्भक्तः भगवदर्चनादिमत्त्वात् । योयदर्चनादिमान् स तस्य भक्तः । यथा संप्रतिपन्नोऽक्रूर प्रह्लादाद्या इति । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् । इत्याद्यनुग्राहकं नवविधज्ञापकत्वमेव नवलक्षणत्वं भक्तेरवगन्तव्यम् । तथा साक्षान्मोक्षांतरंगसाधन, भगवत्प्रसाद, परमसाधन, परम भक्त्युद्भावका,परोक्षज्ञानानुकूल, भगवद्गुणोत्कर्षज्ञानजननद्वारा, मोक्षफलकत्वान्यथानुपपत्या, सर्वेशास्त्राणामपि भगवद्भक्तितात्पर्यकत्वेन भक्तेः प्राधान्यावगमाद्भक्तिर्मोक्षायकेवले 'त्याद्युक्तिर्युक्तास्यात् ।

तथाचयं भगवत्प्रीतिंविषयः । योग्यत्वे सति भगवद्गुणोत्कर्षानुवादकत्वात् । योग्यः सन् यो यद्गुणोत्कर्षानुवादकः स तस्य प्रीतिविषयः यथा संप्रतिपन्नः । अत्र स्नेहपूर्वकत्वस्य वा हेतुविशेषणत्वम् । यो यत्स्नेहपूर्वक यद्गुणोत्कर्षानुवादकः स तत्प्रीतिविषयः । इति ।

व्याप्तेः । मोक्षः मोचकप्रसादमात्रसाधकः । तदभावव्यापकाभावप्रतियोगित्वात् । यद्यदभावव्यापकाभावप्रतियोगि तत्त (न्मात्र)-त्साध्यकम् । यथा धूमवत्त्वमग्निमत्त्वसाध्यकम् । अत्रेऽयं व्याप्तिरनुमानगम्येति प्रसिद्धा पद्धत्यादै ॥

तथा प्रसादो भक्त्यैकसाध्यकः साक्षाद्भक्त्यभावव्यापका-भावप्रतियोगित्वात् । यत्साक्षात्तदभाव व्यापकाभावप्रतियोगि तत्तत्साध्यकम् । तस्मान्मोक्षे प्रसादैकसाध्यत्वेन भक्त्यैक साध्यकत्वाभाववति भक्त्यभावव्यापकीभूत स्वाभावप्रतियोगित्वेन व्यभिचार इति न शङ्कनीयम् । प्रसादभावस्यैव साक्षाद्भक्त्यभावव्यापकत्वात् ।

न मुक्त्यभावो भक्त्यभावव्यापकः। तद्व्यापकाव्यापकत्वे सति तद्व्यापकत्वं तत्साक्षाद्व्यापकत्वं नाम। अतो न हि यद्व्यापकस्य व्यापकं तत्तस्य व्यापकं संभवतीति कृत्वा परंपरया भक्तिव्यापक प्रसादव्यापके मोक्षे व्यभिचारो न वक्तुं शक्य इति ।

तथा भक्तिः। स्वसजातीयसाधनेषूत्तमा। स्वेतर स्वजातीय-साधनाशक्यकार्यकारित्वात् । यथा संप्रतिपन्नः। साजात्यं मुमुक्षु-संबंधित्वेन पक्षे विविक्षितम् । अन्यत्र यत्र यत्र हेतुः स्थाप्यः सः स्वपदार्थः। तत्तद्व्यक्ति परिचायकत्वात्स्वपदस्येति ।

'न तादृशी प्रीतिरीड्यस्य विष्णोर्गुणोत्कर्षज्ञातरि यादृशी स्यात्'। 'यस्य प्रसादात्परमार्तिरूपादस्मात्संसारान्मुच्यते नापरेण'। 'यमेवैष वृणुते तेन लभ्यः' इत्यादिकं पूर्वोक्तानुमानावष्टंभकम् ।

एवम्—

मूलोक्तमुपजीव्यैव ह्यनुमानाष्टकं मया ।
कृतं न मे भयं तस्मात्सतां संसदि विद्यते ॥१॥

नन्वधिकारिनिष्ट ज्ञानवैराग्यभक्तीनां मोक्षसाधनत्वेनाभिमतानीं किं सामान्यलक्षणमितिचेत्। 'सर्वत्र विष्णोरुत्कर्षज्ञानं ज्ञानमितीर्यते'। इत्युक्तरीत्या भक्तिपूर्वकाध्ययनाद्यभिव्यंग्य विष्णूत्कर्षादिज्ञानत्वं मोक्षसाधन ज्ञानलक्षणम्। भगवति अत्युपादेयत्वानुसन्धानपूर्वकं तदन्यत्रासारत्वज्ञानजन्यानासक्तित्वम् वैराग्यलक्षणम्। महात्म्यज्ञानपूर्वस्तु सुघृढः सर्वतो वरः। स्नेहोभक्तिरितिप्रोक्त' इत्युक्तरीत्या भगवन्माहात्म्यज्ञानपूर्वकत्वे सति सर्वाधिकसुधृढस्नेहत्वं 'भक्तिलक्षणम्'। सुधृढस्नेहत्वं देहापत्यादि स्नेहेविद्यते तस्य बन्धकत्वात् तद्व्यावर्तकत्वेन भगवन्माहात्म्यज्ञानपूर्वकत्वं सतीति तन्मात्रोक्तौ। 'रावणादिनिष्ट' कादाचित्कस्नेहे अतिव्याप्तिः तद्वार (तद्व्यावर्त) कतया' सुधृढत्वविशेषणम्। तथापि मुक्तियोग्यकर्तृक रमाब्रह्मादिविषयक स्नेहेऽतिव्याप्तिः स्तस्य साक्षान्मोचकत्वाभावात्। अतो भगवद्विशेष्यकत्वज्ञापनाय भगवतीति वक्तव्यम्। तथापि नित्यसंसारिविशेषसंबंधि स्नेहे अतिव्याप्तिवारणाय सर्वाधिकत्वे विशेषणम्। तथा च भगवन्माहात्म्यज्ञान समानाधिकरणत्वे सति भगवद्विशेष्यक सर्वाधिक सुघृढस्नेहत्वं भगवद्भक्तेर्लक्षणम्।

नन्वेवं भगवन्माहात्म्यज्ञानपूर्वकभक्त्यैव सर्वेषामधिकारिणां मोक्षश्चेज्जारबुद्ध्या कृष्णं सङ्गतानां गोपिका स्त्रीणां कथं मुक्तिरुक्ता सङ्गच्छते। अत्र भागवत दशमे सप्तविंशतिमे अध्याये उक्तं च-

तमेव परमात्मानं जारबुद्ध्यापि सङ्गताः।
जहुर्गुणमयं देहं सद्यः प्रक्षीणबन्धनाः॥ इति।

तत्र जारबुद्ध्यापि सङ्गता इत्युक्तम् । तस्य तात्पर्यमजानन्निव राजा पृच्छति ।

कृष्णं विदुः परं कांतं न तु ब्रह्मतया मुने ।
गुणप्रवाहो परमस्तासां गुणधिया कथम् । इति ।

श्रीशुक उवाच ॥

भक्त्या सन्तत मधुमथन महिमा संस्मरण समुदित संविदा निवृत्तियोग्या मुक्तिर्न तु कामादिना । तेन स्वर्गादि प्राप्तिरेव ।

' कृष्णकामास्तदा गोप्य स्त्यक्त्वा देहं दिवं गताः ' ।
सम्यक् कृष्णं परं ब्रह्म ज्ञात्वा कालात्परं ययुः ।
पूर्वं च ज्ञानसंयुक्ता तत्रापि प्रायशस्तथा ॥
अतस्तासां परं ब्रह्म गतिरासीन्न कामतः ।
न तु ज्ञानमृते मोक्षो नान्यः पंथेति हि श्रुतिः ॥
कामयुक्ता तदा भक्तिर्ज्ञानं चातो विमुक्तिगाः ।
अतो मोक्षेपि तासां च कामो भक्त्यानु वर्तते ॥ इति

तात्पर्यवचनात् । इत्यभिप्रायं हृदि कृत्वा अर्थवादस्यापि स्वार्थ-साधन समर्थकत्वात्तेन चोद्यं परिहरति शुकः ।

उक्तं पुरस्तादेतत्ते चैद्यः सिद्धिं यथा गतः ।
द्विषन्नपि हृषीकेशं किमुताधोक्षजप्रियाः ॥

द्वै मुक्ती ज्ञानानन्दानुभवलक्षणा, नित्यदुःखानुभवलक्षणेति । ते उभे अपि 'सिद्धि' शब्दोक्ते । तत्र यथा शास्त्रं विहितमङ्गी-

कर्तव्यमिति। तदुक्तम्—'सदा द्वेषिणामधरं तमः। मुक्तिशब्दोदितं चैद्यप्रभुना वित्यादि लोकसंग्रहार्थं 'किमुताधोक्षजप्रिया' इति।

अन्यथा—

'कामस्त्वशुभक्रच्चापि भक्त्या विष्णोः प्रसादकृदि'-त्यादिनोदाहरिष्यन्। जगत्प्रपितामहे विष्णौ जारबुद्धिः कथं घटते? इतिचेत्। अत एव 'जारबुद्धापी' 'त्यपि' पदेन गर्हयामास। स्त्रीणांजारे हि प्रेष्टत्वबुद्धिः। सापि नघटत इति चेन्न।

सर्वेषां हरौ प्रेष्टत्वबुद्धेरविगाहतया वृत्तेः 'तदेतत्प्रेयः' इति श्रुतेः। अयं भावः कुतोऽवगन्तव्य इति चेन्न। 'जगत्प्रपितामहे जारबुद्धिर्न युक्ता' इत्याचार्यवचनात्—

नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृप।
अव्यक्तस्याप्रमेयस्य निर्गुणस्य गुणात्मनः ॥१४॥

व्यक्तिरवतारः। अन्यथावतारो न घटत इत्यत्र हेतुमाह। अव्यक्तस्येति। ज्ञानादिगुणात्मनः भगवतो व्यक्तिर्न केवलमसुरनिर्हरणाय किंतु मोक्षलक्षण पुरुषार्थाय। पुरुषार्थस्तु भगवत्प्रसादेन स्यात्। स च भक्त्या। सा हरेर्यथा स्वरूप विज्ञानेन। स्वरूपविज्ञानं च गुणोत्कर्षज्ञानपूर्वकम्। नत्वन्यथा। 'गुणोत्कर्षज्ञातरि यादृशीस्या' दिति श्रुतेः। तस्माद्द्वेषादिना नित्यसुखानंदानुभवलक्षण मोक्षो वर्षानन्त्येनापि न स्यात् ॥१४॥

नन्वेवं तर्हि द्वेषादिना कां सिद्धिं प्राप्नोतीत्यतस्तत्रैवोक्तम्।

कामं क्रोधं भयं मोहं मैत्रीं सौहृदमेव वा ।
नित्यं हरौ विदधतो याति तन्मयतां हि ते ॥१५ इति ।

ये हरौ कामादिकं विदधतः उपासते ते तन्मयतां यांति । कामाद्यात्मतामाप्नुवंति न तु भगवन्मयतां ; नित्यस्तिमितानंदवारिधेः हरेः कामाद्यभावात् । 'हि' शब्दो

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरं ।
तं तमेवेति कौंतेय सदा तद्भावभावितः ॥

इत्यादि स्मृतिं सूचयति । अवधारणार्थो वा । कामिनः कामित्वमेव क्रोधिनः क्रोधित्वमेवेत्यादि । तदुक्तम्—

विमुक्तावपि कामिन्यो विष्णुकामा व्रजस्त्रियः ।
द्वेषिणश्च हरौ नित्यं द्वेषिणस्तमसि स्थिताः ॥ इति ।

विशेषद्योतको वा तदुक्तम्—

भक्त्या हि नित्यकामित्वं न तु भक्तिं विना भवेत् ।
अंतः कांततया वापि मुक्तिर्भक्तिमतां हरौ ॥ इति च ।

मनुष्यविशेषवद्देवविशेषद्योतनार्थोपि भवति । 'स्नेहभक्त्या सदा देवाः कामित्वेनाप्सरस्त्रियः' इत्यादेः । भक्त्यैव मोक्षो नान्येन साधनेनेममर्थं विशेषं च वक्ति । भक्त्या वा कामभक्त्या वा मोक्षो नान्येन केनचित् ॥ इत्यतः कामभक्त्या मोक्षो स्त्रीणां वक्ति ॥ कामभक्त्याप्सरस्त्रीणामित्यादेः उपासनायाः विशेषोस्तीति सूचयति ॥

'उपास्यः श्वशुरत्वेन देवस्त्रीणां जनार्दनः' इत्यादेः। 'तत्तद्योग्यतोपासनामन्तरेण मुक्तिः कस्यापि न स्यात्' इति। इमं व्याचष्टे "योग्योपासां विना नैव मोक्षः कस्यापि सेत्स्यतीत्यादेः। पतित्वपितृमत्वादि विशेषं सूचयति। 'पतित्वेन श्रियोपास्यो ब्रह्मणा मे पितेति च' इत्यादेः। गुरुत्वविशेषमपि ब्रूने। 'गुरुः-श्रीब्रह्मणोः विष्णुः सुराणां च गुरोर्गुरुः' इत्यादेः। सर्वेषामपि ज्ञानेन गुरुत्वं ब्रह्मणः उपास्यदैवत्वं विष्णोरितीमं चाह। 'गुरुर्ब्रह्मास्यजगतो दैवं विष्णुः सनातनः इत्यादेः। तथाच गोपिकास्त्रीणां कामोपसर्जनभक्त्यैव मोक्षो नान्येन प्रधानसाधनेनेति स्थितम्। चैद्यस्य तु द्वेषात्तमोरूपा सिद्धिरेव नत्वानंदानुभावरूपा सिद्धिर्भागवत-श्लोकोक्तेति।

असुरा अपि यो विष्णुं शङ्खचक्रगदाधरं।
भक्तिपूर्वमवेक्षन्ते ज्ञेया भागवता इति॥
विद्विषंति तु ये विष्णुमृषिपुत्रा अपि स्फुटम्।
असुरास्तेपि विज्ञेया गच्छंति च सदा तमः॥
जीवद्वयसमायोगा द्धिरण्यक मुरवाः परे।
भक्तिद्वेषयुताश्च स्युर्मतिस्तेषां यथा निजा॥
कंसपूतानिकाद्याश्च बांधवादि युता यतः।
जीवद्वयसमायोगाद्वतिद्वय जिगीषवः॥
सर्वथा भक्तितो मुक्तिर्द्वेषात्तम उदीरितम्।
नियमस्त्वनयोर्नित्यं मोहायान्यवचो भवेत्॥इति ब्राह्मे'

इति तृतीयतात्पर्य द्वितीयाध्यायोक्तं सर्वं समञ्जसमिति॥

ननु भागवते तृतीये—'अनिमित्ता भगवति भक्तिः सिद्धेर्गरीयसी'त्यत्र मोक्षावाप्ति साधनीभूता भक्तिर्गरीयसीत्यन्यथा प्रतीतेः कथं भक्तेः साधनश्रेष्टत्वमिति चेन्न। प्रमाणेनैव 'सिद्धि' शब्दस्य विविक्षितार्थ संभवात्।

अपूर्णभक्तेर्मुक्तौ तु न सुखं पूर्तिमेष्यति।

अतस्तादृश मुक्तेश्च भक्तिः पूर्णा गरीयसी॥ इति चेति तृतीयतात्पर्यानुसारेण अपूर्णमुक्त्यपेक्षया पूर्णभक्तेः पूर्णसुखसाध्यत्वेन श्रैष्ट्योक्तेरविरोधात्।

ननु द्वेषोज्झिता भक्तिरेव मुक्तिं प्रति प्रधान साधनेत्युक्ते—

कामात्स्नेहाद्भयात् द्वेषाद्यथा भक्त्येश्वरे मनः।

आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः॥

गोप्यः कामाद्भयात्कंसो द्वेषच्चैद्यादयो नृपाः।

संबंधाद्वृष्णायः स्नेहाद्यूयं भक्त्या वयं विभो॥

इत्यादि सप्तमभागवत विरोधः। अत्र कामादीनां मुक्तिसाधनत्वाभिधानात्। तथा तत्पूर्वंत न श्लोक द्वयम्।

कीटः पेशस्कृता रुद्धः कुड्ये यांतमनुस्मरन्।

संरंभभययोगेन विंदते तत्सरूपतां॥

एवं कृष्णे भगवति मायामनुज ईश्वरे।

वैरेण धूतपाप्मानः तमापुरनुचिंतया॥ इति।



यथा वैरानुबन्धेन मर्त्य स्तन्मयतामियात् ॥२९॥

इत्यत्र तादात्म्यर्थः किंनस्यादित्यतस्तत्राह । कीटेति । द्वेषेण निंदत-श्चैद्यस्य कृष्णेन सायुज्यं कथमभूत् ? इति प्रश्नस्य परिहारः कथमागतः ? इत्यतो वाह । कीट इति । यथा पेशस्कृता भृङ्गेण कुड्ये भित्तिसुविरे रुद्धः कीटः शामनामा क्रिमिः तस्य भृङ्गसरूपतां समानाकारतां विंदते । न तु तादात्म्यम् । ततो भिन्नत्वेन दृश्यमानत्वात् । कीदृशः यांतं उपर्यागत्य गभीरं नंदतं भृङ्गं संरंभभययोगेन ईषत्कोपभययुक्तस्नेहेनाऽन्नं संददतीति स्नेहेन स्वात्मानमाकृष्य क्लिश्नातीति कोपयुक्तभयेनचानुस्मरन् । अत्र स्नेहस्यैव प्राधान्यम् । प्राणधारणपोषणयोः सततमिष्टत्वात् । कोपभययोस्तात्कलिकत्वात् । अप्राधान्यमित्यतो योगस्य संरंभभययोर्विशेषणतयोक्तेः योग्यस्य स्नेहार्थत्वं ‘ प्रीतिस्नेहस्तथा योग प्रेमबन्ध इतीर्यते ’ इति शब्दनिर्णये सिद्धम् ॥२९॥

कृष्णे भगवत्येवं वैरेण युक्तयाऽनुचिंतया तं कृष्णमवापुरित्यन्वयः । अत्र सज्जीवानां शापादिना असुराविष्टानामेव मुक्तिर्न केवलानां । तस्मात्तदाविष्टाऽसुरा ‘ वैरेण प्राप्त पाप्मानः’ । ‘असुर्यानाम ते लोकाः ’ इति श्रुतेः तं लोकसमुदायं प्रापुः । संतो जयादयोऽनुचिंतया तं कृष्णमवापुरित्ययं विशेषो वैरयुक्तयानुचिंतयेत्याचार्योक्तापि शब्देन गर्हाभिधायिना ज्ञातव्यः । ‘ अनुचिंतेति तां प्राहुर्भक्तिपूर्वा तु या स्मृति ’रितिवचनात् । भक्तिपूर्वैवानुचिंता त्राभिप्रेतीतेति ज्ञातव्यम् । अतोत्र चैद्यादीनां भक्तियुतत्वं प्रतिपाद्यत इति ज्ञातव्यम् ।

अन्यथा कीटोदाहरणं निरन्वितं स्यात् । उदाहरणस्यापि भक्त्यर्थत्वं कुत ? इति चेत्-

स्नेहादन्नं ददातीति स्वाकर्षणभयेऽपि वा ।
विद्यमानेऽप्यल्पकोपे संगतिस्नेहतस्तथा ॥
पेश स्वद्रूपतां कीटो यथा याति तथैव तत् ।
चैद्यादयोऽसुरावेशाद्धरौ द्वेषयुता अपि ॥
निजस्वभावया भक्त्या नीता हरिसरूपतां ।
तथापि करुणो विष्णुरन्यावेशाद्यदि द्विषत् ॥
हीयते किं ममानेन नित्यानन्दस्वरूपिणः ।
देहबन्धयुतानां हि द्वेषिणा स्वकृतं भवेत् ॥
मम कोह्यपराधयेत निर्दोषसुखरूपिणः ।
अतो मय्यपराधस्तु स्वस्मिन्नेव न मे भवेत् ॥
अतो यद्यसुरावेशात्कृतमेतैर्नदुष्कृतम् ।
अनादिभक्तो यस्मान्मे मोचयिष्ये ततस्त्वहम् ॥
इति मत्वा मोचयति चैद्यादीनपि केशवः ॥

इति गारुड वचनात् ।

इतोपि भक्तिगर्भ कामादिनैव भगवत्प्राप्तिरित्याह । कामादिति तृतीयार्थे पञ्चमी । कामादिभिरपि यथा यथावत् भक्त्या सहैव कृष्णे मन आविश्य द्वेषादिना यद्यघमापादितं तदघं हित्वा तस्य कृष्णस्य गतिं लोके गता इत्यन्वयः । प्रथमतः कामादियुक्ता भक्त्या

हरौ मनः आवेश्य पश्चाद्यथाभूतया भक्त्या अघं हित्वेत्यर्थः ॥३१॥
बहव इत्युक्तस्य विषयविभागमाह । गोप्य इति ॥ कामात् काम-युक्तया भक्त्या । कंसः कंसाविष्टेभृगुः । भययुक्तया भक्त्या । चैद्यादयः चेद्यादिस्थाः जयाद्याः द्वेषयुक्तया वृष्णयः संबन्धो बंधुता तन्निमित्तया यूयं पांडवाः समतुलित बहुमानयुक्तया वयं तु शुकादिशब्दवाच्याः केवलया भक्त्या । अत्र कश्चन विशेषः ।

गोप्यः कामयुताभक्ता, कंसाविष्टः स्वयं भृगुः ।
ज्ञेयो भययुतो भक्तश्चैद्यादिस्था जयादयः ॥
विद्वेषसंयुताः भक्ताः वृष्णयो बन्धुसंयुताः ।
बहुमानस्नेहसाम्याद्देवाभक्ताः प्रकीर्तिताः ॥
स्नेहोपसर्जनादेव बहुमानन्मुनीश्वराः ।
बहुमानोऽपि देवानां ऋषिभ्योप्यधिको मतः ॥
ब्रह्म वींदेन्द्रकामादेरितरेषां यथा क्रमम् ॥

इति वचनादवगन्तव्यः । तथाच । स्वयोग्यानन्दाविर्भावलक्षण मोक्ष-साधनक्षमाऽ 'क्षीणाभक्तिरेव' । द्वेषादिकमर्थवाद लक्षणम् । तत्तत्स्वभावज्ञापनार्थमुच्यत इत्याशयेन ।

तस्माद्वैरानुबन्धेन निर्वैरेण भयेन वा ।
स्नेहात्मकेन वा युंज्यत्कथंचिन्नेक्षते पृथुक् ॥

इत्यादि ग्रन्थस्य प्रवृत्तत्वात् ।

भक्त्यात्वनन्यया शक्य अहंमेवं विधोऽर्जुन ।

प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ।

यमेवैष वृणुते तेन लभ्यः । इत्यादिना भक्तेरेव भगवत्प्रीतिजनकोक्तेः । 'अनानुभूतिरवधून्वानः' ।

कर्मणा मनसा वाचा योद्विष्याद्विष्णुमव्ययम् ।
मज्जन्ति पितरस्तस्य नरके शाश्वतीः समाः ॥
तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥

इत्यादिना भगवद्द्वेषस्यानर्थ हेतुत्वोक्तेः । 'भक्तिरेव मुक्तेर्मुख्यसाधनीभूता' न द्वेषादिकमिति सिद्धम् ।

विष्णुभक्तेश्च तद्ज्ञानादन्यतो मुक्तिवाचकाः ।
विष्णोर्गुणह्रासवाचः श्रीब्रह्मादेस्तथा क्रमात् ॥
विष्ण्वादिद्वेषतश्चैव सुखवाचस्तथाऽखिलाः ।
मोहनार्थाः समुद्दिष्टाः यथार्थद्योतकास्तथा ॥

इति 'प्रकाशसंहिता' वचनेन बहुप्रमाण संवादयुक्तेन द्वेषादेर्मोक्षसाधनत्वोक्तेर्मोहार्थकत्वाच्चेति । तथाच—

विष्णोर्भक्तिर्विशेषेण मोक्षावाप्तौ हि कारणम् ।
तद्भक्तेषु क्रमेणैव रमाद्येषु त्वनन्तरं ।
तृतीयमपि वैराग्यं न चान्यन्मोक्षकारणम् ।

इति छांदोग्य भाष्योक्तरीत्यापि विष्णुभक्तेरेव विशेषेण सर्वोत्तमत्वेन विशेषेण मोक्षावाप्ति कारणत्वेन ज्ञानस्य च भक्तिव्यापारकत्व

सिद्ध्या च वैराग्यस्य च तदुभयं प्रति साधनत्वेन ज्ञानभक्तिवैराग्याणां त्रयाणामपि साक्षात्परंपरया मोक्षसाधनत्वेन आवश्यकत्वात्तत्रापि भक्तेः प्राधान्याद्युक्तैव मुख्यतो भक्तिगम्यत्वोक्तिर्विष्णोरिति सिद्धम् ॥ तृतीयमपि वैराग्यमित्यत्र वैराग्यस्य ज्ञानभक्तिसमकक्षता निरासाय 'तृतीय'मित्युक्तमिति वेदेशीयोक्तेः । तेन ज्ञानस्य भक्तिव्यापकत्वं सिद्ध्यतीति तत्रैवोक्तेश्च ॥

'एवमनन्तसद्गुणगणपूर्णत्वेनाशेषदोषगन्धविधुरत्वेन च सद्ज्ञानवैराग्यभक्तिमद्भिर्नम्यो गम्यः श्रीहयवदनाख्यः श्रीश एव सतां स्वरूपानन्दबोधदाता ।'

श्रीशं सद्गुणनिर्दोषं हयास्यं बोधमोददम् ।
नम्यं सद्ज्ञानवैराग्यभक्तिगम्यं नमाम्यहम् ॥

इत्यशेषमतिमङ्गलम् ॥ ॥ श्रीकृष्णार्पणमस्तु ॥

श्री चीमनहळ्ळी कृष्णार्य तनुजः श्रीशतुष्टये ।
श्रीमद्गुरुवराचार्य- प्रसादाद्भक्तिदर्पणम् ॥
चक्रेऽस्मज्जनकोपास्यो हयास्यः करुणान्वितः ।
श्रीशः सज्ज्ञानवैराग्यभक्तिभूतिप्रदोऽस्तु मे ॥
श्री चीमनहळ्ळी कृष्णार्यहृद्ब्जालमन्दिरः ।
हयग्रीवो रमाकान्तः प्रियतां सेवयाऽनया ॥

इति शं

## ಇದೇ ಗ್ರಂಥಕರ್ತರಿಂದ ರಚಿತವಾಗಿ ನಮ್ಮಲ್ಲಿ ದೊರೆಯುವ ಇತರ ಗ್ರಂಥಗಳು

| | | |
|---|---|---|
| 1 | श्रीमन्मरुच्छास्त्रसारसंग्रहः (संस्कृतभाषा) | 0—8—0 |
| 2 | ಮರುಚ್ಛಾಸ್ತ್ರಸಾರಸಂಗ್ರಹ (ಸರಳ ಕನ್ನಡಾನುವಾದ) (ಅಚ್ಚಿನಲ್ಲಿದೆ) | 1—8—0 |
| 3 | ಸದ್ಭಕ್ತಿದರ್ಪಣಂ (ಕನ್ನಡ ಭಾಷೆಯಲ್ಲಿ ಅರ್ಥಾನುವಾದ) | 2—0—0 |
| 4 | ತತ್ವಮಸಿ (ಪ್ರಮಾಣ ಸಹಿತ) ಕನ್ನಡ ಭಾಷೆ | 0–12—0 |
| 5 | ತತ್ವಮಸಿ (ವಿಮರ್ಶೆ) ,, | 1—8—0 |
| 6 | ಸರ್ವಜ್ಞ ಸಂದೇಶ ಸಂಪುಟ ೧ ಬೈಂಡಾದವು | 5—0—0 |
| 7 | ಮಾಸಪತ್ರಿಕೆಗಳು ,, ೨ ,, | 4—8—0 |
| 8 | ,, ,, ೩ ,, | 4—8—0 |
| 9 | द्वैताद्वैतप्रश्नोत्तरमालिका (गुरुशिष्य संवादरूपा) पं. रघुनाथाचार्य विरचिता | 0—8—0 |
| 10 | अद्वैतवेदान्तसारखण्डनम्—(महाविद्वान् चीमनहल्ली कृष्णाचार्यवर्य विरचितम् ) —N.B. 9–10 ಅಚ್ಚಿನಲ್ಲಿದೆ. | 2—0—0 |
| 11 | ಆಧ್ಯಾತ್ಮಾಮೃತನಿಧಿ—ಪ್ರಮೇಯ ಗ್ರಂಥ ಕನ್ನಡದಲ್ಲಿ | 3—0—0 |
| 12 | ಬದರೀ ಮಾಹಾತ್ಮ್ಯ ,, | 1—0—0 |

---

Printed at
Yuganthara Press, Bangalore-18.